॥ ऋणमोचन अङ्गारकस्तोत्रम् ॥

। श्रीरस्तु ।
श्रीपरमात्मने नमः ।
अथ ऋणग्रस्तस्य ऋणविमोचनार्थं अङ्गारकस्तोत्रम् ।

स्कन्द उवाच ।
ऋणग्रस्तनराणां तु ऋणमुक्तिः कथं भवेत् ।
ब्रह्मोवाच ।
वक्ष्येऽहं सर्वलोकानां हितार्थं हितकामदम् ।
अस्य श्री अङ्गारकमहामन्त्रस्य गौतम ऋषिः । अनुष्टुप्छन्दः ।
अङ्गारको देवता । मम ऋणविमोचनार्थे अङ्गारकमन्त्रजपे विनियोगः ।
ध्यानम् ।
रक्तमाल्याम्बरधरः शूलशक्तिगदाधरः ।
चतुर्भुजो मेषगतो वरदश्च धरासुतः ॥ १॥

मङ्गलो भूमिपुत्रश्च ऋणहर्ता धनप्रदः ।
स्थिरासनो महाकायो सर्वकामफलप्रदः ॥ २॥

लोहितो लोहिताक्षश्च सामगानां कृपाकरः ।
धरात्मजः कुजो भौमो भूमिदो भूमिनन्दनः ॥ ३॥

अङ्गारको यमश्चैव सर्वरोगापहारकः ।
सृष्टेः कर्ता च हर्ता च सर्वदेशैश्च पूजितः ॥ ४॥

एतानि कुजनामानि नित्यं यः प्रयतः पठेत् ।
ऋणं न जायते तस्य श्रियं प्राप्नोत्यसंशयः ॥ ५॥

अङ्गारक महीपुत्र भगवन् भक्तवत्सल ।
नमोऽस्तु ते ममाशेषं ऋणमाशु विनाशय ॥ ६॥

रक्तगन्धैश्च पुष्पैश्च धूपदीपैर्गुडोदनैः ।
मङ्गलं पूजयित्वा तु मङ्गलाहनि सर्वदा ॥ ७॥

एकविंशति नामानि पठित्वा तु तदन्तिके ।
ऋणरेखा प्रकर्तव्या अङ्गारेण तदग्रतः ॥ ८॥

ताश्च प्रमार्जयेन्नित्यं वामपादेन संस्मरन् ।

एवं कृते न सन्देहः ऋणान्मुक्तः सुखी भवेत् ॥ ९॥

महतीं श्रियमाप्नोति धनदेन समो भवेत् ।
भूमिं च लभते विद्वान् पुत्रानायुश्च विन्दति ॥ १०॥

मूलमन्त्रः।
अङ्गारक महीपुत्र भगवन् भक्तवत्सल ।
नमस्तेऽस्तु महाभाग ऋणमाशु विनाशय ॥ ११॥

अर्घ्यम् ।
भूमिपुत्र महातेजः स्वेदोद्भव पिनाकिनः ।
ऋणार्थस्त्वां प्रपन्नोऽस्मि गृहाणार्घ्यं नमोऽस्तु ते ॥ १२॥

इति ऋणमोचन अङ्गारकस्तोत्रं सम्पूर्णम् ।